❀ श्रीशिवो जयति ❀

# बटुतोषिणी

बटुतोषिणी

मिथिलाजनपदान्तर्गतठाढ़ीनिवासि-
पण्डितश्रीहरिशङ्करशर्मसंगृहीता



तदात्मजेन
(व्याकरण-साहित्य-वेदान्ताचार्येण)
श्रीविश्वम्भरशर्मणा
स्वद्रव्यव्ययेन मुद्रापयित्वा प्रकाशिता

पुस्तकप्राप्तिस्थानम्
मास्टर खेलाड़ीलाल ऐण्ड सन्स
संस्कृत बुकडिपो
कचौड़ीगली, बनारस सिटी

Pandey



सप्तमसंस्करणम् २००० ]   वि० संवत्–२००८   [ मूल्यम् ।।।=)

# सप्तम-संस्करण-भूमिका

अये पाणिनीयाश्छात्राः !

वैयाकरण-सिद्धान्त-कौमुद्याः फक्किकानामाशयस्य स्फोरणाय फक्किकाम विवृतिर्विरचितपूर्वा; तथापि सुकुमारमतीनां बहूनां फक्किकार्थावगमे तल्लेखने काठिन्यानुभवमाकलय्य तत्प्रथम-भागरूपेणेयं व्यरचि भ्रातृचरणैः।

एते च ( ग्रन्थकर्तृ-पं० हरिशंकरझाशर्माणः ) १९३४तमविक्रमवत्सरी पौषशुक्लषष्ठ्यां प्रादुर्भूय, अल्पीयसैव कालेन वेदव्याकरणपुराणादीन् स्वजन्मभूमौ मिथिलायामेवाधिगत्य, विशेषपरिष्काराय, दर्शनग्रन्थानामनुशीलनाय च म० म० स्व० शिवकुमारशास्त्रिसविधे काश्यां वर्षत्रयं स्थित्वा समाप्य स्वाभिलपितविषयान्, बड़ोदा-दरभंगाराजाभ्यां व्याकरणनिष्णातादिपदवप्रतिष्ठा सूचकधौतवस्त्रादिदानैर्बहुमानिता गृह एव स्थिता भोजनादिदानपूर्व बहुशश्छात्राननध्याप्य बरेलीस्थविष्णुविद्यालये पञ्चविंशतिवर्षेभ्योऽप्यधिका प्रधानाध्यापकपदमलंकृत्य गृहमागतास्तत्रापि यथासमयमागतान् विद्यार्थि विद्यया कृतार्थयन्तस्तपसि स्थिताः ( प्राच्य-प्रतीच्य-विद्यावन्तौ श्रीविश्वम्भ श्रीदिवाकरशर्माणौ, श्रीगुणाकरकुमारश्चेति ) सुतत्रयं कन्यकामेकाञ्च हि पुत्र-पौत्र-भ्रातृ-भ्रातृजादिभिर्लाल्यमानचरणाः २००५तमविक्रमवत्सरीयफाल्गु कृष्णाष्टम्यां शिवसायुज्यमगमन् ।

इमे च विद्यार्थिजनानां स्वल्पाक्षरैः स्पष्टतया ग्रन्थाशयावगतये व्याकर ग्रन्थानां प्रश्नोत्तरीः, परिभाषेन्दुशेखर-काव्यप्रकाशयोष्टीकां च कृतवन्त तेष्वेवेयमपि बहुतोषिणी। सा चेतः पूर्वं षट्सु संस्करणेषु मुद्रिता शीघ्र समाप्तिमगात्। सम्प्रति मुद्रणोपकारि वस्तूनां महार्घत्वे दौर्लभ्ये च सत्य छात्राणामुपकाराय पुनरपि मुद्रयित्वा प्रकाश्यते। आशासेऽस्या यथावद शीलनेन भवन्तो ग्रन्थकर्तृपरिश्रमसाफल्यं विधास्यन्तीति।

पटना-विश्वविद्यालयः<br>पटना<br>तिथिः ज्यैष्ठी पूर्णा<br>२००८ वि० वत्सरीया

ग्रन्थकर्तुरनुजस्तदन्तेवासी च<br>श्रीविष्णुलालझा शास्त्री, पुरातत्त्व

❀ ॐ नमः शिवाय ❀

# वटुतोषिणी



वटूनां दुःखमालोक्य फक्किकाविवृतौ मया ।
प्रवेशाय वटूनां हि क्रियते वटुतोषिणी ॥१॥

[हलन्त्यम्] 'न विभक्तौ तुस्माः' इत्यस्यारम्भसामर्थ्यात् 'हलन्त्य'-मित्यस्यावृत्तिः, अन्यथा 'हलन्त्यमादिरन्त्येने'त्यनयोर्वाक्यार्थबोधे परस्परापेक्षत्वेनाऽन्योन्याश्रयाद्बोधाभावेन तद्वैयर्थ्यं स्पष्टमेवेति दिक् ॥१॥

ननु हकाराकारयोः सवर्णसंज्ञायां ग्रहणकशास्त्रबलात् हकारेणाकार-ग्रहणापत्तौ, विश्वपाभिरित्यत्र होढ इत्यनेन ढत्वं कुतो नेति चेन्न, नाज्झलाविति निषेधात् । न च नाज्झलाविति सूत्रे ग्रहणकशास्त्रस्या-प्राप्त्या तेन ह्रस्वस्यैव निषेधेऽत्र दीर्घस्य ढत्वं स्यादेवेति वाच्यम्, नाज्झलाविति सूत्रे कालसमयवेलास्विति निर्देशेन आकारस्यापि प्रश्लेषादिति दिक् ॥२॥

ननु तस्मादित्युत्तरस्यादेरिति न्यासेनैव सिद्धे पृथग्योगः परस्येति ग्रहणञ्च किमर्थमिति चेन्न, अष्टौ इत्यत्राऽनेकाल्शित्सर्वस्येत्यतः परत्वा-नेनादेरकारस्यौशादेशे सकारस्य रुत्वे विसर्गे च अष्टौः इति रूपापत्तेः । थास्थितन्यासे तु आदेः परस्येत्यतः परत्वादनेकाल्शित्यनेन सर्वादेशः सिध्यतीति दिक् ॥ ३ ॥

ननु कानि सन्ति कौ स्त इत्यत्र श्नसोरल्लोप इत्यल्लोपे अचः रस्मिन्नित्यनेन वाक्यसंस्कारपक्षे स्थानिवत्त्वेनाऽच्परत्वाद्यणावादेशौ तो नेति चेन्न, न पदान्तेति सूत्रेण पदान्तविधौ स्थानिवत्वनिषेधात्, संस्कारपक्षे स्थानिवत्वाप्राप्तेश्चेति दिक् ॥४॥

कृष्ण+ऋद्धिरिति स्थिते स्थानेऽन्तरतम उरण् रपर इत्यनयोर्बला-

दादूगुण इति गुणेनारि अचो रहाभ्यामिति द्वित्वे झरो झरीति लोपे एतयोर्विकल्पे च त्रीणि रूपाणि। तदुक्तं मूले—द्वित्वाभावे लोपे सत्येकधम्, असति लोपे, द्वित्व-लोपयोर्वा द्विधम्, सति द्वित्वे लोपे चासति त्रिधमिति ॥५॥

तव+लृकार इति स्थिते, स्थानेऽन्तरतम उरण् रपर इति बलादादगुण इति गुणेनालि, अनचि चेति लकारस्य, यणो मय इति ककारस्य च द्वित्वे चत्वारि रूपाणि भवन्ति। तदुक्तं मूले—द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि। तवल्कारा दिषुबुधैर्बोध्यं रूपचतुष्टयमिति ॥६॥

[ अवेहि ] ननु अव + आ + इहीति स्थिते, धातूपसर्गयोः कार्यमन्तरंगमित्यन्तरंगत्वादादूगुण इति गुणे अन्तादिवच्चेत्यनेन पूर्वान्तवद्भावादाङ्त्वे ओमाङोश्चेति एङि पररूपमिति च पररूपे प्राप्ते परादिवद्भावेनेण्धातुत्वात् एत्येधत्यूठ्स्वित्यनेन वृद्धिप्राप्तौ च; वृद्धेः पररूपबाधकत्वेन वृद्धिरेव स्यादिति चेन्न, पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायेन एङि पररूपमित्यस्य बाधेऽपि परत्वादोमाङोश्चेति पररूपस्यैव प्राप्तेः तेनात्र वृद्धिरसाधुरेवेति।

[ प्रार्च्छति ] प्र+ऋच्छतीति स्थिते. स्थानेऽन्तरतम उरण् रपर इति बलादुपसर्गादृतीति वृद्ध्या आरि, अचो रहाभ्यामिति द्वित्वे सिद्धम्। अत्राऽन्तादिवच्चेत्यनेन पूर्वान्तवद्भावेन पदान्तत्वमादाय खरवसानयोरिति विसर्गमाशंक्य उभयथर्क्ष्वित्यादिनिर्देशेन, अन्तवद्भावेन पदान्तरेफस्य न विसर्ग इति ज्ञापनान्नेति समाहितम्। अत्रैव ऋत्यक इति पाक्षिकप्रकृतिभावमाशंक्य, उपसर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन 'पुनर्वृद्धिरेवे'ति नियमान्नेति समाहितं मूले ॥८॥

[ उपेडकीयति ] एङि पररूपमिति सूत्रे वा सुप्यापिशलेरित्यतो वा सुपीत्यनुवर्त्य, वाक्यभेदेन च एङादिसुबन्तप्रकृतिकधात्ववयवेऽचि विकल्पेन पररूपमित्यर्थे, उप+एडकीयतीति स्थितेऽनेन पररूपे सिद्धम्। पक्षे वृद्धिरेचीति वृद्धौ सिद्धम् ॥९॥

[अचि किं कुमारी शेते] अयं भावः, अकः सवर्णे इति सूत्रेऽचीत्यस्याननुवृत्तौ ईकारशकारयोः सवर्णसंज्ञायां कुमारी शेते इत्यत्रापि दीर्घापत्तेः। नाज्झलाविति निषेधस्तु न; आक्षरसमाम्नायिकानामेव निषेधविधानात्। अणुदिदितिशास्त्रस्य तु सावर्ण्यविधिनिषेधाभ्यां पूर्वमनिष्पत्त्या नाज्झलावित्यत्राप्रवृत्तेः ॥१०॥

[होतृकारः] होतृ+ऋकार इति स्थिते, ऋति सवर्णे ऋवेत्यनेन द्विमात्रिक ऋ-आदेशे सिद्धम्। पक्षे ऋत्यक इति प्रकृतिभावे होतृ ऋकार;, एतद्विकल्पे सवर्णदीर्घे होतॄकार इति। तदुक्तं मूले "आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरामात्रे" ति ॥११॥

[अर्थग्रहणं किम्] ननु सूत्रारम्भसामर्थ्याद्, ईदूतौ च सप्तमीप्रगृह्यम्, अदसः, एच द्विवचनमिति लघुभूतन्यासेनैव सिद्धे गुरुभूतन्यासाच्च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्तीति परिभाषाया अप्राप्त्या प्रत्ययग्रहणपरिभाषया तदन्तविधौ ईदूदन्तं यत्सप्तम्यन्तमित्याद्यर्थेनैव प्रत्ययलक्षणेन सोमो गौरी अधिश्रित इत्यादिसिद्धौ ईदूतौ च सप्तम्यर्थे इति सूत्रेऽर्थग्रहणं व्यर्थमिति चेन्न, सप्तम्यर्थमात्रे पर्यवसन्नं यदीदूदन्तं तदेव प्रगृह्यमित्यर्थ-ज्ञापनेन चारितार्थ्यात्। तेन वाप्यामश्वो वाप्यश्व इति समासे वापीनिष्ठाधिकरणतानिरूपिताधेयतावानश्व इत्यर्थे प्रगृह्यत्वन्नेति संक्षेपः ॥१२॥

[टोः किम्] ननु षकारस्य पदान्ते जश्त्वविधानात्तत्र ष्टुत्वनिषेधस्येष्टतया टोर्ग्रहणं व्यर्थमिति चेन्न, सर्पिष्टममित्यत्र ह्रस्वात्तादौ तद्धिते इति षत्वस्य जश्त्वं प्रत्यसिद्धतया जश्त्वाप्राप्तौ साम्प्रतं ष्टुत्वनिषेधापत्तेः ॥

[चतुर्मुखः] ननु स्थानेऽन्तरतम उरण् रपर इति संहितायां प्रथमान्तपाठेऽन्तरतम आदेशो भवतीत्यर्थे चतुर्मुख इत्यत्र रेफस्य स्थानमात्रसादृश्येनान्तरतमो णकाररूपोऽनुनासिकः कुतो नेत्याशंक्य सप्तम्यन्तपाठेन समदधाति स्थानप्रयत्नाभ्यामित्यादिनेति प्राचीनाः। नवीनास्तु सप्तम्यन्तपाठस्य सुद्ध्युपास्य इत्यादौ दीर्घे यणसिद्ध्या भाष्ये

दूषितत्वेन चतुर्मुख इत्यत्र णकारः कुतो नेत्याशंक्य, यरोऽनुनासिक इति सूत्रे अनुस्वारस्य ययीति सूत्रात्सवर्णपदानुवृत्त्या सवर्णोऽनुनासिको भवतीत्यर्थे रेफोष्मणां सवर्णा न सन्तीति भाष्यबलान्नेति समादधुः ॥१४॥

सम्+स्कर्त्तेति स्थिते, समः सुटीति मस्य रुत्वे अत्रानुनासिक इत्यनुनासिके पक्षे अनुनासिकात्परोऽनुस्वार इत्यनुस्वारे खरवसानयोरिति विसर्गे संपुंकानामिति सत्वे सँस्स्कर्त्ता संस्स्कर्त्तेति। अत्र समो वा लोपमेके इति भाष्यबलान्मलोपपक्षेऽपि अनुनासिकानुस्वाराभ्यामेकस-काररूपद्वये पूर्वोक्तरूपद्वये च, अनचि चेति सकारस्य शरः खय इति ककारस्य अनचि चेत्यनुस्वारस्य अचो रहाभ्यां द्वे यणो मय इति च तकारस्य द्वित्वे चतुष्पंचाशत्। एषु अणोऽप्रगृह्यस्येत्यनुनासिकविकल्पेऽष्टोत्तरशतं रूपाणीति दिक् ॥१५॥

पुम्+कोकिल इति स्थिते, पुमः खय्यम्परे इति रुत्वे अनुनासिके पक्षेऽनुस्वारे च, विसर्गे; व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्युदासादिदुदुपधस्येति षत्वाप्राप्तौ कुप्वोः ᳲकᳲपौ चेति जिह्वामूलीये, अव्युत्पत्तिपक्षे षत्वे च प्राप्ते, तौ प्रबाध्य; संपुंकानामिति सत्वे पुँस्कोकिलः, पुंस्कोकिल इति सिद्धम् ॥१६॥

[ पुंख्यानम् ] चक्षिङो ल्युटि अनादेशे चक्षिङः ख्याञादेशे खशादिरयमादेश इति भाष्यबलेन शस्य यो वेति शकारस्य यकारे रुत्वं प्रति यत्वस्यासिद्धत्वेनाम्परत्वाभावेन पुंख्यानमित्यत्र पुमः खयीति रुत्वन्नेति संक्षेप ॥१७॥

[ वासः क्षौमम् ] अत्र विसर्जनीयस्य सः, शर्परे विसर्जनीयः, कुप्वोः ᳲक ᳲपौ चेत्येतेषां प्राप्तौ, येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायेन जिह्वामूलीयेन सत्वस्य बाधेऽपि; परत्वात् शर्परे विसर्जनीय इति विसर्ग एवेत्याशयः ॥१८॥

[ कुत्वोऽर्थे किम् ] ननु द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यत इति चतुष्कपाल इत्यत्र न दोष इति

चेन्न, साहचर्यपरिभाषाया अनित्यत्वज्ञापनेन चारितार्थ्यात् ॥१६॥

[ भ्रातुः कृपा ] कस्कादिषु भ्रातुष्पुत्रशब्दपाठेन एकादेशशास्त्र-निमित्तकस्य न षत्वमिति ज्ञापनेन, प्रकृते एकादेशशास्त्रमूत उदिति, परम्परया तन्निमित्तकस्य विसर्गस्य इदुदुपधस्येति षत्वाभाव इति दिक् ॥

[ अग्निः करोति ] ननु स्थानिवत्सूत्रं प्रति त्रिपाद्या असिद्धत्वा-त्तत्रकर्त्तव्ये स्थानिवद्भावाप्राप्त्या प्रकृते इदुदुपधस्येति सूत्रेऽप्रत्ययग्रहण-सत्वेऽपि षत्वं कथन्नेति चेन्न, अनेनैव वतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्तिरिति ज्ञापनेनादोषात् । अत एव राम इत्यादौ विसर्गसिद्धिः ॥२१॥

ननु स्वौजसमौडित्यनेन रोर्विधानेऽपि पथिमथ्यृभुक्षामादित्यत्र दीर्घोच्चारणेन रौ परे दीर्घो नेति कल्पनेन, राम इत्यादौ सुपि चेत्यस्या-प्राप्त्या दोषाभाव इति चेन्न; यशोऽत्र पयोऽत्रेत्यत्रोत्वं प्रति रुत्वस्या-सिद्धत्वादुत्वानापत्तेः, उत्वविधानस्य तु रुविधानवादिमते शिवो ऽर्च्य इत्यादौ चारितार्थ्यादित्याशयेनाह स्वौजसमौडिति ॥२२॥

शिवेति प्रातिपदिकात्स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्य इति स्थिते जश्त्वं बाधित्वाऽतो रोरप्लुतादप्लुत इत्युत्वे प्रथमयोरिति दीर्घस्य नादिचीति निषेधे आद्गुण इति गुणे एङः पदान्तादिति पूर्वरूपे शिवोर्च्य इति सिद्धम् ॥२३॥

ननु देवाः सन्तीत्यत्र यत्वस्यासिद्धत्वाद्विसर्ग एव भविष्यतीति भोभगो इति सूत्रेऽशीति व्यर्थमिति चेन्न, विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वापत्तेः। अनल्विधाविति निषेधस्तु न शंक्यः ? रोरिति समुदायरूपाश्रयणादिति संक्षेपः ॥२४॥

ननु ढ्लोप इति सप्तमी श्रुत्या तस्मिन्निति परिभाषया पूर्वस्योपस्थित्या सिद्धे पूर्वग्रहणं व्यर्थमिति चेन्न, अलुगुत्तरपदे इत्यत उत्तरपदानुवृत्त्योत्तर-पदशब्दस्य समासचरमावयवे रूढतया, लिहो ढौकनं लीढौकनं रक्ता-न्निर्गतं नीरक्तमित्यत्र सूत्रस्य चारितार्थ्येऽपि अजर्घा लीढ इति भाष्य-प्रयोगे पुनारमत इत्यादौ च दीर्घानापत्तेः ॥२५॥

ननु राजन्-ङस्-पुरुष-सु इति समुदायस्य प्रत्ययान्ततदादिभिन्नत्वेन, अर्थवदिति प्रातिपदिकत्वे सिद्धे कृत्तद्धितेति सूत्रे समासग्रहणं व्यर्थमिति चेन्न, यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवेति नियमार्थत्वात्। तेन राज्ञः पुरुष इत्यादिवाक्ये प्रातिपदिकत्वन्न। न च्चैवमपि समासग्रहणं व्यर्थमेवेति वाच्यम्, यावतां विनाऽनुपपत्तिस्तावत्सर्वं ज्ञापयतीति न्यायबलेन पूर्वभागपदघटितसङ्घातातिरिक्तस्यैवार्थवतो ग्रहणमिति बोधनेनादोषादिति दिक् ॥२६॥

ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया रमा-गौरीत्यादौ स्वादेः सिद्धतया ङ्याप्प्रातिपदिकादिति सूत्रे ङ्याब्ग्रहणं व्यर्थमिति चेन्न, ङ्यन्तादाबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ् माभूदिति बोधनार्थत्वात्। तेन आर्यिका आर्यकेत्यत्रोदीचामातः स्थाने यकपूर्वाया इतीत्वविकल्पसिद्धिः। लोहिनिका लोहितिकेत्यत्र वर्णादनुदात्तात्तोपधात्तो न इति ङीप्नकारादेशौ विकल्पेन सिद्धौ। अन्यथा स्वार्थिकत्वेनाऽन्तरङ्गत्वात्कनि, उक्तरूपासिद्धेरिति दिक् ॥२७॥

येन विना यदनुपपन्नं तेन तदाक्षिप्यते इति न्यायेन सम्बुद्ध्या अङ्गाक्षेपे, येन यदाक्षिप्यते तस्य तत्रैवाऽन्वय इति न्यायेन सम्बुद्धावेवान्वये, अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते स चेङ्ह्रस्वाभ्यां परीभूतश्चेदित्यर्थे च हे कतरदित्यत्राऽतिव्याप्तिः, हे कुलेत्यत्र पूर्वरूपोत्तरं पूर्वान्तवद्भावेनाङ्गत्वेऽपि ततः सम्बुद्धेरभावादव्याप्तिश्च स्यादतो लक्ष्यानुरोधादन्यत्राप्यन्वय इत्याशयेनाह—सम्बुद्ध्याक्षिप्तस्येति ॥२८॥

ननु अपरनिमित्तकत्वेनान्तरङ्गत्वात्सम्बुद्धिलोपे प्रत्ययलक्षणेन ह्रस्वस्य गुण इति गुणे हे हरे इत्यादि सिद्धौ, एङ्ह्रस्वादिति सूत्रे एङ्ग्रहणं व्यर्थमिति चेन्न; परत्वान्नित्यत्वाद्वा सम्बुद्धिगुणे ह्रस्वात्परत्वाभावेन लोपानापत्तेः ॥२९॥

यस्मात्प्रत्ययविधिरितिसूत्रे विधिग्रहणाभावे इदं शब्दात्किमिदंभ्यां वो घ इति वतुपि वकारस्य घत्वे चाऽयनेयीति इयादेशे इदंकिमोरीश्

कीतीशादेशे यस्येति लोपे उगितश्चेति ङीपि स्त्री+इयतीति स्थिते इयत्प्रत्ययस्य स्त्रीशब्दात्परत्वेन तस्मिन्परेऽङ्गत्वे स्त्रिया इत्यनेनेयङापत्तेः असिद्धवदत्रे ति असिद्धत्वन्तु न समानाश्रयत्वाभावादिति दिक् ॥३०॥

अत्र सूत्रे प्रत्यय इत्यस्याभावे रामाभ्यामित्यादौ विशिष्टस्याङ्गत्वापत्तौ सुपि चेति दीर्घानापत्तेः। न च यजादिसुबव्यवहितपूर्वस्याङ्गावयवस्यातो दीर्घ इत्यर्थान्न दोष इति वाच्यम्; देवदत्त ओदनमपाक्षीदित्यत्र देवदत्तोत्तरं सुपं निमित्तीकृत्य लुङ्पर्यन्तस्याङ्गत्वे देवात्पूर्वमडागमापत्तेरिति दिक् ॥३१॥

ननु प्रत्ययः परश्चेति निर्देशेन सावेत्वन्नेति कल्पनाद्राम इत्यादौ दोषाभावेन बहुवचने झल्येदित्यत्र बहुवचनग्रहणं व्यर्थमिति चेन्न? रामस्येत्यत्र दोषापत्तेः। न चात्र 'अस्य'-विधानेनादोष इति वाच्यम्, तथा सति इदम् शब्दस्य अस्येत्यनापत्तेः। न च टौसोरनकः आपि लोप इति न्यासेन दोषाभावाद्बहुवचनग्रहणं व्यर्थमेवेति वाच्यम्, रामाभ्यामित्यत्रैत्वापत्तेः, सुपि चेति सूत्रं तु रामायेत्यत्र चरितार्थम्। ङेरय इति करणे तु रामाभ्यामित्यत्रेव रामेभ्य इत्यत्रापि दीर्घापत्तेः, एत्वविधानस्य रामेष्वित्यत्र चारितार्थ्यमिति तत्त्वम् ॥३२॥

ननु अतो वृद्धिर्लुकि हलीत्यतो हलीत्यनुवृत्त्या रामा इत्यादौ दोषाभावेनात्र झलीति व्यर्थमिति चेन्न, रामाणामित्यत्र दोषापत्तेः। न च सन्निपातपरिभाषयात्र न दोष इति वाच्यम्; अनेनैव झलिग्रहणेनैत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनात्। अत एव सर्वेषामित्यत्रैत्वसिद्धिरिति दिक् ॥३३॥

ननु इणकोरित्यधिकारसूत्रं विधिसूत्रं मत्वा आदेशप्रत्यययोरिति सूत्रं व्यर्थमिति चेन्न, सुपीः सुपिसौ सुपिस इत्यत्रापि षत्वापत्तेः। नच शासि-वसि-घसीनाञ्चे ति सूत्रं धातोः सस्य यदि षत्वं स्यात्तर्हि एषामेवेति नियमार्थमिति प्रकृते न दोष इति वाच्यम्, उक्तनियमे सिषेधेत्यादौ षत्वानापत्तेरिति दिक् ॥३४॥

ननु सर्वादिप्रयुक्तकार्याणामेकवचनबहुवचनयोरेव विधानादत्रो-भशब्दपाठो व्यर्थ इति चेन्न, उभकावित्यत्राऽव्ययसर्वनाम्नामकजिति अकज्विधानार्थन्तस्याऽऽवश्यकत्वात्। न च स्वार्थे कप्रत्ययेनोक्तरूप-सिद्धिरिति वाच्यम्, द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवात्रापि उभादुदात्तो नित्यमित्यत्र नित्यमिति योगविभागेनायच्प्रसङ्गात्, अकचि तु तन्मध्यपतितन्यायेन द्विवचनपरत्वान्न दोष इति दिक् ॥३५॥

उभयोऽन्यत्रेति वार्तिकस्योभयो मणिरुभये देवमनुष्या इत्युदाहरण-दानपरकभाष्येण उभयशब्दस्य तद्धितश्चासर्वविभक्तिरित्यनेनाव्यय-संज्ञावारणार्थं तसिलादय इत्यादिपरिगणनेन चोभयशब्दस्य द्विवचने रूपमनभिधानमिति कैयटाशयः। न चोदाहरणमादरणीयमिति भाष्येण पचतिरूपं पचतिकल्पमिति परिगणनफलदानेन च द्विवचने रूपं भवत्येवेति हरदत्ताशयः ॥३६॥

उभावयवौ येषामित्यर्थे संख्याया अवयवे तयबिति तयपः उभादुदात्तो नित्यमित्ययजादेशे ततो जसि स्थानिवत्त्वेन तयप्प्रत्ययान्त-तया प्रथमचरमेति विकल्पेन प्राप्तसंज्ञाया विभक्तिनिरपेक्षत्वेनान्त-रङ्गत्वात्सर्वादीनीत्यनेन सर्वनामसंज्ञां प्रत्यसिद्धत्वादनेन नित्यसंज्ञायां जसः शीति श्यादेशे गुणे च उभये इति सिद्धम् ॥ ३७ ॥

त्वकं पिता यस्य अहकं पिता यस्येति लौकिकविग्रहे युष्मद् सु पितृ सु, अस्मद् सु पितृ सु—इत्यलौकिकविग्रहे बहुव्रीहिसमासात्प्रागेव न बहुव्रीहाविति सर्वनामसंज्ञानिषेधेऽकचोऽप्राप्त्या के, प्रत्ययोत्तरपदयो-श्चेति त्वमादेशे नद्यृतश्चेति कपि त्वत्कपितृको मत्कपितृक इति सिद्धम्। न बहुव्रीहावित्यस्याभावे भवकन्तमतिक्रान्तोऽतिभवकानित्यत्रेव समासेऽप्यकचः श्रवणापत्तावुक्तरूपासिद्धेरिति पाणिनिमतम्। भाष्यकारस्तु अकच्स्वरौ तु कर्तव्यौ प्रत्यंगं मुक्तसंशयावित्युक्त्वा त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वा न बहुव्रीहाविति सूत्रं प्रत्याचख्यौ, एवं च यथोत्तरं मुनीनां प्रामाण्यमिति बलाद्भाष्यकारमतस्यैव प्रामाण्यमिति दिक् ॥३८॥

वर्णश्चाऽऽश्रमश्चेतरश्चेत्येतेषामितरेतरयोगद्वन्द्वादामि सर्वाद्यन्तत्वेन सर्वादीनीति प्राप्तसंज्ञाया द्वन्द्वे चेति निषेधे सुटोऽप्राप्त्या नुटि दीर्घे णत्वे च वर्णाश्रमेतराणामिति। न चानेन समुदायस्य निषेधेऽपि अवयवस्य निषेधाभावात् आमि सर्वनाम्न इति सूत्रे तदन्तविधिना अवर्णान्त-सर्वनामान्तात्परस्यामः सुडित्यर्थे सुट् स्यादेवेति वाच्यम्, सर्वनाम्नो विहितस्यामः सुडिति भाष्यव्याख्यानेनादोषात्॥ ३९॥

['निर्जरसा] इनादीन् बाधित्वा परत्वाज्जरसिति दीक्षितमते निर्दिश्यमानस्यादेशा भवन्ति, एकदेशविकृतमनन्यवदिति परिभाषाभ्यां जराया जरसिति जरसादेशे निर्जरसेत्यादि। अत्र प्राचीनाः विप्रतिषेधे परमित्यत्र परशब्दस्येष्टवाचित्वादिष्टं च कार्यं पूर्वविप्रतिषेधेनेनाद्यादेशरूपम्, तेन पूर्वविप्रतिषेधेनेनाद्यादेशे सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशे निर्जरसिन निर्जरसात् निर्जरसैः ङसि निर्जरस्येत्याहुः, तद्भाष्यविरुद्धम्। तथाहि वहुवचने झल्येत्, आङि च, ओसि च, आपः सम्बुद्धावित्येवं योगं विभज्य इनेकारः प्रत्याख्यातः। एवमकारोच्चारणसामर्थ्यात्पररूपाभावे सवर्णदीर्घेणैव रामादिति सिद्धौ, आति दीर्घोच्चारणं च प्रत्याख्यातम्। अन्यथा निर्जरसिनेत्यादिसिद्धये इकार-दीर्घोच्चारणयोरावश्यकत्वेन प्रत्याख्यानासंगतिः स्पष्टैव। एवमतिजरैरिति भवितव्यं सन्निपातपरिभाषयेति भाष्यमपि विरोधे योजनीयम्। (अत्र-स्थमतविचारो न वटूनामुपयोगीति) दिक्॥४०॥

यूषशब्दस्य शसादौ पद्न्निति यूषन्नादेशे भत्वादल्लोपोऽन इत्यल्लोपे रषाभ्यामिति णत्वे यूष्ण इत्यादि। नचात्राचः परस्मिन्निति सूत्रे पूर्वस्माद्विधिरिति पञ्चमीसमासपक्षे, अल्लोपस्य स्थानिवत्त्वेन व्यवधानात्कथं णत्वमिति वाच्यम्, तथा सति अड्व्यवाय इत्येव सिद्धेः। त्रिपादीस्थे कार्ये न स्थानिवदित्यर्थकपूर्वत्रासिद्धीये न स्थानिवदिति निषेधस्तु न, संयोगादिलोपलत्वणत्वेषु तदप्रवृत्तेरिति दिक्॥४१॥

द्वयोरह्नोर्भव इत्यर्थे तद्धितार्थोत्तरेति समासे कालाट्ठञिति ठञो द्विगोर्लुगनपत्ये इति लुकि, राजाहः सखिभ्यश्चेति टचि अह्नोऽह्न

इत्यह्नादेशे प्रातिपदिकत्वान्ङौ संख्याविसायेति अह्नादेशे विभाषा ङिश्योरित्यल्लोपे द्व्यह्नि पक्षे द्व्यहनि। अह्नादेशविकल्पे आद्गुण इति गुणे द्व्यह्न इति ।।४२।।

शेषो घ्यसखीति सूत्रे यूशब्दानुवृत्तौ मात्रे इत्यत्रापि घिसंज्ञायां घेर्ङितीति गुणापत्तेः। न च ऋतो ङिसर्वनामस्थानयोरिति सूत्रे ङिग्रहणेन ऋदन्तस्य यदि ङिति सुपि गुणः स्यत्तर्हि ङावेवेति नियमान्न दोष इति वाच्यम्, हरिश्च हरश्चेति द्वन्द्वे हरशब्दस्यापि घिसंज्ञकत्वेन द्वन्द्वे घीति पूर्वनिपातापत्तेः ।।४३।।

['दीर्घात्किम्] हल्ङ्याबिति सूत्रे दीर्घग्रहणाभावे निष्कौशाम्बिरतिखट्व इत्यत्र गोस्त्रियोरिति ह्रस्वे स्थानिवत्त्वेन ङीप्त्वाप्त्वे आदाय सुलोपापत्तेः, दीर्घग्रहणे कृते तु दीर्घत्वधर्मस्यालमात्रवृत्तित्वेनानल्विधाविति निषेधान्न दोष इति ।।४४।।

ननु अनङ्सावित्यत्र सोर्डेति न्यासेन सखेति सिद्धौ हल्ङ्याबिति सूत्रे हल्ग्रहणं व्यर्थम्, राजेत्यादौ संयोगान्तलोपेनैव सिद्धेरिति चेन्न, संयोगान्तलोपस्यासिद्धत्वान्नलोपानापत्तेरिति दिक् ।।४५।।

शोभनः सखेत्यर्थे समासात्सौ अनङ् सौ सख्युरसम्बुद्धाविति सूत्रयोरंगत्वात्तदन्तेऽपि प्रवृत्त्या सुसखा। एवं सुसखायावित्यादि। एवं शोभनः सखा यस्येति बहुव्रीहावपि सुसखेत्यादि। न चान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वमुपसर्जनत्वं गौणत्वं चेति प्राचीनमते गौणत्वाद्गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति परिभाषया कथमत्रानयोः प्रवृत्तिरिति वाच्यम्, स्त्रीत्वानिमित्तत्वे सति सुब्विभक्त्यनिमित्तकत्वं पदकार्यत्वं तत्रैवोक्तपरिभाषा प्रवर्त्तते न तु प्रातिपदिककार्ये इत्यदोषात्। अस्य सुसखिसमुदायस्य सखिभिन्नत्वेन घिसंज्ञायां नाद्यादेशे सुसखिना सुसखये इत्यादि ।।४६।।

सखीमतिक्रान्त इत्यर्थे समासे घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वाद्राजाहः सखिभ्यष्टजिति टचोऽप्राप्त्या गोस्त्रियोरिति ह्रस्वे समासात्स्वादौ लाक्षणिकत्वेन अनङ् सावित्यादेरप्राप्तौ अतिसखिरित्यादि हरिवत् ।।४७।।

[ द्विपर्यन्तानां किम् ] एतन्नियमाभावे सर्वादिपठितभवच्छ-ब्दस्य सौ त्यदादीनाम इत्यत्वे पररूपे च भव इति स्यात्, न च सत्यप्यत्वे स्थानिवत्त्वेनैकदेशविकृतन्यायेन वा उगित्वान्नुम् स्यादेवेति वाच्यम्, शसी शसिनाविति घिनुणन्ते नुमोऽभावाय झल्ग्रहणमपकृष्य उगिज्झ-लन्तस्यैव नुम्विधानेनात्र तदप्रवृत्तेः। न च त्यदादितः पूर्वमेव भवच्छ-ब्दस्य पाठकरणेनादोष इति वाच्यम, स च भवांश्चेत्येकशेषे सिद्धान्ते त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते इति बलाद्भवन्ताविति। अधुना त्यदादीनि सर्वैर्नित्यमिति बलात्ताविति स्यादापत्तेः ॥४८॥

ननु दुर्धिय इत्यत्र गतिपूर्वकत्वात् वृश्चकभिय इत्यादौ कारकपूर्वक-त्वाच्च एरनेकाच इति यण् कुतो नेति चेन्न, उपसर्गाः क्रियायोग इति सूत्रे योगग्रहणेन यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञेति निय-मात्; दुःस्थिता धीर्येषामित्यर्थे दुरित्यस्य धीशब्दार्थं प्रति गतित्वा-भावात्। एवं वृश्चिकाद्भीः वृश्चिकभीरिति बुद्धिकृतमपादानत्वं नेह विवक्षितम्, किन्तु वृश्चिकस्य भीः वृश्चिकभीः अथवा वृश्चिकसम्ब-न्धिनी भीर्वृश्चिकभीरिति शाकपार्थिवादीनामित्युत्तरपदलोपिसमास इति यणोऽप्राप्तिरिति दिक् ॥४६॥

[ उत्तरपूर्वस्यै ] उत्तरस्याः पूर्वस्याश्च दिशोरन्तरालं दिगित्यर्थे दिङ्नामान्यन्तराल इति समासान्के विभक्तौ विभाषादिक्समासे बहु-व्रीहाविति विकल्पेन सर्वनामत्वे स्याडादिकार्ये सिद्धम्, पक्षे याडादिकार्ये उत्तरपूर्वायै इति। अत्र प्रतिपदोक्तदिङ्नामानीतिविहितदिक्समासस्य ग्रहणात् योत्तरा सा पूर्वा यस्या इत्यर्थे अनेकमन्यपदार्थे इति बहुव्रीहौ सर्वनामत्वाप्राप्त्या उत्तरपूर्वायै इत्येवेति ॥५०॥

(जरसौ) अत्र परत्वाज्जरसादेश इति दीक्षितमतम्। प्राचीनास्तु पूर्वविप्रतिषेधेन जरसादेशात्पूर्वं श्यादेशे सन्निपातपरिभाषाया अनित्यत्व-माश्रित्य जरसादेशे जरसी इत्याहुस्तन्निर्मूलमिति निर्जरशब्दे उक्तम्। न च दीक्षितमतेऽपि जरसादेशस्य स्थानिवत्त्वेनाबन्तत्वमादाय श्यादयः

स्युरेवेति वाच्यम्, आ आबिति प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणेनाल्विधित्वात्स्थानिवत्त्वाप्राप्तेः ॥५१॥

[ अतिखट्वाय ] ननु याडाप इति सूत्रे आकारप्रश्लेषेऽपि अत्र दीर्घोत्तरमाकाररूपत्वस्य विद्यमानत्वेन स्थानिवत्वेनाप्त्वमाश्रित्य याट् कुतो नेति चेन्न, स्त्रीप्रत्यये चानुपसर्जनेनेति बलात् आबन्तं यत्तदादि तद्रूपादङ्गात्परस्य याडित्यर्थेनादोषात् ॥५२॥

[ स्त्रियामिति त्रिचतुरोः ] अयं भावः श्रुतानुमितयोः श्रुतसम्बन्धो बलवानिति न्यायेन स्त्रियामित्यस्य त्रिचतुरोरेव विशेषणत्वमन्नत्वङ्गस्य, तेन प्रियास्त्रयस्त्रीणि वा यस्या इत्यर्थे प्रियत्रिशब्दस्य मतिवद्रूपम्। आमि प्रियत्रयाणामिति विशेषः। प्रियास्तिस्रो यस्येत्यर्थे तिस्रादेशे प्रियतिस्रा प्रियतिस्रावित्यादि। प्रियास्तिस्रो यस्य तत्कुलमित्यर्थे स्वमोर्लुक्यपि न लुमतेति निषेधस्यानित्यत्वात्पक्षे तिस्रादेशे प्रियत्रि प्रियतिसृ इति। अन्यत्र रादेशात्पूर्वविप्रतिषेधेन नुमि प्रियतिसृणी इत्यादि, टादौ तृतीयादिष्विति पुंवद्भावे प्रियतिस्रा प्रियतिसृणेत्यादीति दिक् ॥ ५३ ॥

[ अतिस्त्रियै ] स्त्रियमतिक्रांतायै इत्यर्थे समासान्ङे विभक्तौ ङिति ह्रस्वश्चेति ह्रस्वान्तत्वान्नदीसंज्ञाविकल्पः। अस्त्रीति निषेधस्तु नाशंक्यः, तस्येयङुवङ् स्थानावित्यनेन संबद्धतया दीर्घस्यैव निषेधकत्वन्न तु ह्रस्वस्य। तत आटि वृद्धौ इयङादेशे च सिद्धम्। पक्षे गुणे अतिस्त्रये इति ॥५४॥

[ प्रधीशब्दस्येति ] आध्यै प्रध्य ब्राह्मण्यै इति भाष्यप्रयोगेण पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारमते प्रकृष्टं ध्यायतीत्यर्थे प्रधीशब्दस्य नित्यस्त्रीलिंगतया लक्ष्मीवद्रूपम्। उक्तभाष्यप्रयोगे बहुव्रीहिमाश्रित्य लिंगान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमते उक्तेऽर्थे प्रधीशब्दस्य पुंवद्रूपम्। प्रकृष्टा धीरित्यर्थे उभयमते लक्ष्मीवद्रूपम्। एवं सुष्ठु ध्यायतीत्यर्थे सुधीशब्दस्य वृत्तिकारमते लक्ष्मीवत्, कैयटमते पुंवत्। ग्रामणी कटप्रू खलपू इत्यादीनामुभयमतेऽपि पुंवदेव, ग्रामनयनादेः स्वभावतः पुंसो धर्मत्वात्। अन्यत्सर्वं सुस्पष्टमिति दिक् ॥५५॥

(प्ररारणाम्) प्रकृष्टो रा यस्मिन् ते इत्यर्थे समासादामि ह्रस्वो नपुंसके, एच इग्घ्रस्वादेश इति ह्रस्वे नुमचिरेति बलान्नुटि रायो हलीत्यात्त्वे सिद्धमिति माधवः। सिद्धान्ते तु सन्निपातपरिभाषाविरोधान्नुट्यात्त्वाभावे दीर्घे च प्ररीणामित्येव। दीर्घे कर्त्तव्ये सन्निपातपरिभाषा न प्रवर्त्तते दीर्घविधानसामर्थ्यात् ॥५६॥

(उपदेशे किम्) भाष्ये धुगित्यत्र घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशंक्य अपवादत्वाद्घत्वमिति समाधाय अथवा हो ढोऽदादेः, धातोर्घ इति योगं विभज्य उत्तरयोगे नञ्-रहितदादिपदानुवृत्तिरित्युक्तम्। तदनुवृत्तिर्व्यर्था सती उपदेश इत्यर्थं बोधयति तदभावे अधोगित्यत्र सत्यडागमे दादित्वाभावाद्घत्वं न स्यादित्यव्याप्तिः, दामलिहमात्मन इच्छति दामलिह्यति ततः क्विपि अल्लोप-यलोपे प्रातिपदिकत्वात्सौ सुलोपे दामलिडित्यादौ दादित्वेन घत्वं स्यादित्यव्याप्तिरित्याशयः ॥५७॥

अनडुह्शब्दात्सौ चतुरनडुहोरित्यामि इको यणचीति यणि सावनडुह इति नुमि सुलोपे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वाभावे अनड्वानिति सिद्धम्। अत्र विशेषविहितेन नुमा सामान्यविहितस्यामस्तक्रकौण्डिन्यन्यायेन बाधात्कथमामिति न शंक्यम्, आच्छीनद्योरिति सूत्रादादित्यनुवृत्त्या अनडुह्शब्दसम्बन्ध्यावर्णात्परो नुमित्यर्थे उपजीव्यविरोधेनाबाधादिति दिक् ॥५८॥

चतुर्शब्दादामि षट्चतुर्भ्यश्चेति नुटि रषाभ्यामिति णत्वे अचो रहाभ्यामिति द्वित्वे चतुर्णां चतुर्ण्णामिति। ननु पूर्वत्रासिद्धीयमद्विर्वचने इति बलाण्णत्वं प्रति द्वित्वस्यासिद्धत्वाभावात्परत्वाद्द्वित्वे णत्वं युक्तमिति चेन्न, द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमिति वार्तिकारम्भसामर्थ्याद्वर्णद्वित्वे तदप्रवृत्तेः। न च वाक्क् वाग्गिति भाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृत्तिरावश्यकीति वाच्यम्, द्वित्वे कर्तव्येऽन्यदसिद्धन्न द्वित्वन्त्वसिद्धमेवेत्यर्थकरणेनादोषादिति दिक् ॥५९॥

किमः कः इति सूत्रे इमोऽः इति न्यासे त्यदाद्यनुवृत्त्या त्यदादे-

रिमोऽः स्यादित्यर्थेनैव सिद्धे ककारोच्चारणं व्यर्थं सत् अकच्सहितस्याप्ययमादेश इति ज्ञापयति तेन साकचि कक इति रूपन्नेति। न च त्यदादौ किम्-शब्दस्य पाठाभावेन कथमादेश इति वाच्यम्, त्यदादौ पाठकरणेनादोषात्। कुतिहोरित्यत्र उतिहोरिति न्यासेन क्वातीत्यत्र वातीति न्यासेन सर्वदोषपरिहार इति॥ ६०॥

[ अशवचनम् ] ननु इदमोऽन्वादेश इति सूत्रेऽनुदात्तमात्रविधानेन आभ्यामिति सिद्धेऽश्विधानं किमर्थमिति चेन्न; साकचि हलि लोप इत्यस्याप्राप्त्या तत्राभ्यामिति सिद्धयेऽश्विधानस्यावश्यकत्वात्॥ ६१॥

राजन्शब्दाच्छसि भसंज्ञायामल्लोपोऽन इत्यल्लोपे स्तोःश्चुनाश्चुरिति श्चुत्वे राज्ञ इति। न चात्र पञ्चमीसमासपक्षेऽल्लोपस्य स्थानिवत्त्वात्कथं श्चुत्वमिति वाच्यम्; पूर्वत्रासिद्धे न स्थानिवदिति निषेधात्। न चाऽन्तरङ्गे श्चुत्वे कर्त्तव्ये बहिरंगस्याल्लोपस्यासिद्धत्वात् कथं श्चुत्वमिति वाच्यम्, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतया परिभाषाया एवाप्राप्तेः। वाह ऊठित्यत्रोठ्ग्रहणेन ज्ञापितत्वादियं षाष्ठी॥६२॥

वृत्रहन्-शब्दाच्छसि भसंज्ञायामल्लोपे च नकारे परे कुत्वविधानसामर्थ्यादल्लोपस्य स्थानिवत्वाभावे हो हन्तेरिति कुत्वे योगविभागसामर्थ्यादनन्तरस्येति न्यायं बाधित्वाऽपूर्वस्येत्यनेन सर्वणत्वनियमेन णत्वाप्राप्त्या वृत्रघ्न इति सिद्धम्। कुव्यवायेहादेशे णत्वप्रतिषेधो वक्तव्य इति वार्त्तिकभाष्यविरोधेन माधवोक्तं वैकल्पिकणत्वं नादरणीयमिति दिक्॥ ६३॥

मघवन्शब्दात्सौ मघवा बहुलमिति त्रादेशे उगिदचामिति नुमि सुलोपे संयोगान्तलोपे प्रत्ययलक्षणेन सर्वनामस्थान इति दीर्घे मघवानिति; पक्षे मघवेति। अत्र दीर्घे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वन्तु न शङ्क्यम्; भाष्ये श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्य; मघवाबहुलमिति सूत्रं प्रत्याख्यातम्। सूत्रारम्भप्रत्याख्यानयोः फलैक्याय बहुलग्रहणेन सिद्धत्वाभावकल्पनात्। अत एव मघवानसौ मघवानृजीषीत्यादि प्रयोगाः सङ्गच्छन्ते॥ ६४॥

कृतैकशेषाभ्यां शतसहस्रशब्दाभ्यां जश्शसोः श्यादेशे, नुमि, दीर्घे शतानीत्यादि; अत्र ष्णान्ता षडिति षट्संज्ञायां षड्भ्यो लुगिति लुक् तु नाशंक्यः; सर्वनामस्थानसन्निपातेन जातस्य नुमः सन्निपातपरिभाषया तद्विघातकत्वात् ॥६५॥

[ अष्टौ ] 'अष्टन्'-शब्दाज्जश्शसोः; अष्टनो दीर्घादिति सूत्रे दीर्घ-ग्रहणेनात्वस्य वैकल्पिकत्वबोधनाद् अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशेन जश्शसोर्विषयेऽप्यात्वज्ञापनादात्वे अष्टाभ्य औशिति औशादेशे वृद्धौ च सिद्धम् ॥६६॥

प्रिया अष्टौ येषां तानित्यर्थे समासाच्छसि भसंज्ञायामल्लोपे प्रियाष्ट न इति । अत्र पञ्चमीसमासपक्षेऽल्लोपस्य स्थानिवत्त्वान्न ष्टुत्वम् । पूर्वत्रासिद्धे न स्थानिवदिति निषेधस्तु न तस्य दोषः संयोगादिलोपलत्व-णत्वेष्विति निषेधात् । पंचमीसमासस्यानित्यत्वपक्षे तु कार्यकालपक्षे त्रिपाद्यामप्यन्तरंगपरिभाषायाः प्राचीनमते प्रवृत्तिस्वीकारेण तयाऽसिद्ध तया न ष्टुत्वमिति दिक् ॥६७॥

[ त्वं स्त्री ] अत्र ङेप्रथमयोरिति सोरमादेशे त्वाहौ साविति-त्वाहादेशे शेषे लोप इति टिलोपे परमपि अमिपूर्व इति पूर्वरूपं बाधित्वा अपरनिमित्तकत्वेनान्तरंगत्वाट्टाप् कथं नेति चेन्न, अलिंगे युष्मदस्मदी इति वार्तिकेन लिङ्गाभावबोधनेन टापोऽप्राप्तेः । न च शीशिलुगनुम्विधिभ्यो युष्मदस्मदादेशाः पूर्वविप्रतिषेधेनेति वार्तिकेन लिङ्गसत्ताबोधनादुक्तसमा-धानं न युक्तिकरमिति वाच्यम्, शेषेलोप इत्यस्यावृत्त्या शेषे इत्यत्र स्थानिनो-ऽधिकरणत्वविवक्षया च मपर्यन्ताच्छेषस्य लोपो भववीत्यर्थे अन्तरंगत्वा-दतोगुण इति पररूपेऽनेन चाद्शब्दस्य लोपेऽदन्तत्वाभावेन टापोऽप्राप्तेः ।

[ यूयम् ] अत्र ङेप्रथमयोरिति जसोऽमादेशे यूयवयौ जसीति यूयवयादेशे शेषे लोप इत्यन्तलोपे स्थानिवत्वेनामो जसः शीति श्यादेशः कुतो नेति चेन्न, अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति परिभाषया वारण-सम्भवात् । न च द्वयोरित्यादिनिर्देशेन अस्या अनित्यत्वादसत्वाच्च

श्यादेशो दुर्वार इति वाच्यम्, ङेप्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्याम् मान्त एवावशिष्यते न तु विक्रियत इति व्याख्यानेनादोषात् ॥६६॥

ननु ओकारभकारसकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु, सुबन्तस्य च टेरिति वार्तिकेन युवामावामिति सिद्ध्युत्तरमकचि युवकामावकामिति सिद्धौ मपर्यन्तस्येत्यधिकारसूत्रं किमर्थमिति चेन्न, त्वया मयेत्यत्र त्वयाम्येत्यापत्तेः। न चाच्येरिति न्यासेनात्र न दोष इति वाच्यम् युवकाभ्यामावकाभ्यामित्यत्र दोषापत्तेः ॥७०॥

[ युष्माकम् ] युष्मदस्मद्भ्यामामि साम आकमित्याकमादेशेऽन्त्यलोपे सवर्णदीर्घे च सिद्धम्। नन्वत्र सामः सर्वथाऽसम्भवेनससुट्कनिर्देशः किमर्थं इति चेन्न, आम्येव सामत्वमारोप्याकमादेशेऽन्त्यलोपे च स्थानिवत्त्वेऽपि न सुटः प्राप्तिरित्याशयात्। अत एवोक्तं मूले भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देश इति ॥७१॥

[ समस्यमाने ] त्वमावेकवचने युवावौ द्विवचने इति सूत्रयोरर्थःपरत्वे व्याख्यानस्य फलं दर्शयति समस्यमाने इत्यादिना। तथा च त्वां मां वाऽतिक्रान्त इति विग्रहे परत्वात्पूर्वविप्रतिषेधाद्वा सुजस्ङेङस्सु त्वाहौ सावित्यादेः प्राप्तावपि अन्यत्र त्वमावेवादेशौ भवतः एवं युवामावां वाऽतिक्रान्त इति विग्रहे सुजस्ङेङस्सु त्वाहौ सावित्यादेः प्राप्तावपि, अन्यत्र युवावादेशौ स्तः एवं युष्मानस्मान् वाऽतिक्रान्त इति विग्रहे सुजस्ङेङस्सु त्वाहादेः प्राप्तावपि, अन्यत्र केप्या ‌शा ति सन्दर्भोक्तरीत्या स्वयमूहनीयमिति दिक् ॥७२॥

अमुमंचतीत्यर्थे क्विबन्नन्तत्वात्प्रातिपदिकत्वेन सौ अनिदितामिति नलोपे, उगिदचामिति नुमि, सुलोपे संयोगान्तलोपे, क्विन्प्रत्ययस्येति कुत्वे विष्वग्देवयोश्च टेरद्र्यंचतावप्रत्यय इत्यद्र्यादेशे यणि, अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववदिति बलाददसोऽसेरित्युत्वमत्वे अमुमुयङ् अन्त्यबाधे अन्त्यसदेशस्येति बलात्परस्यैवमुत्वमिति मते अदमुयङ्, अः, सेः सकारस्य स्थाने यस्येत्यर्थेऽत्र त्यदाद्यत्वाभावेन मुत्वं नेति मते अदद्र्यङिति मूले स्पष्टम् ॥७३॥

[ सेदुषः ] सदेर्लिटि क्वसौ द्वित्वे एत्वाभ्यासलोपे च पदसंस्कार-पक्षे प्रातिपदिकत्वेन शसि पूर्वापरस्थतनिमित्तकत्वेनान्तरङ्गत्वादिटि ततो वसोः संप्रसारणमिति संप्रसारणेऽपीटः श्रवणापत्तिरिति चेन्न, अकृतव्यूहा इति परिभषया संप्रसारणेनेटो निमित्तस्य वलादित्वस्य विनाशसम्भावनायां पूर्वमेवेटोऽप्राप्तेरिति दिक् ॥७४॥

तत्पूर्वकाद् दृशेः त्यदादिष्विति क्विन्नन्तत्वात्प्रातिपदिकत्वेन सौ आसर्वनाम्न इत्यात्वे सोर्लोपे क्विन्प्रत्ययस्येत्यस्यासिद्धत्वाद्व्रश्चेति षत्वे जश्त्वेन डकारे, ततः कुत्वेन गकारे च तादृक् तादृगिति दीक्षिताशयः। क्विन्प्रत्ययस्येत्यत्र कुः क्विन्यत इति न्यासेन दृष्ट इत्यध्याहारेण च सिद्धे प्रत्ययग्रहणं वीप्सागर्भबहुव्रीहिलाभार्थं तेन षत्वापवादत्वात्कुत्वेन खकारे चर्त्वे तादृक्, चर्त्वाभावपक्षे जश्त्वं प्रति कुत्वस्यासिद्धत्वात्खकार एव दिगादिभ्य इति निर्देशान्नासिद्धत्वमिति वा बोध्यमिति कैयटाशयः ॥७५॥

[ विमलदिवि ] विमला द्यौर्यस्मिन्नहनीत्यर्थे समासादौ विभक्तौ नपुंसकाच्चेति शयादेशेऽन्तर्वर्तिनीं विभक्तिं प्रत्ययलक्षणेनादाय राजपुरुष इत्यादौ पूर्वस्येवात्रोत्तरपदस्यापि पदसंज्ञायां दिव उदित्युत्वे प्राप्ते उत्तरपदत्वे चापदादिविधौ प्रतिषेधेनादोषात् ॥७६॥

[ अहः] ननु अहः अहोभ्यामित्यादौ रुत्वरत्वयोरसिद्धत्वान्नलोपः कथन्नेति चेन्न, रूपरात्रिरथन्तरेष्वहो रुत्वं वाच्यमिति वार्तिकारम्भसामर्थ्यादहन्नित्यावर्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुत्वविधानेनादोषात् ॥७७॥

दीर्घाणि अहानि यस्मिन्नित्यर्थे समासात्सौ हल्ङ्याबिति सुलोपे प्रत्ययलक्षणेनासुपीति निषेधाद्रोऽसुपीत्यस्याप्राप्त्याऽहन्निति रुत्वेऽपि तस्याऽसिद्धत्वात्सर्वनामस्थान इति दीर्घे दीर्घाहाः निदाघ इति सम्बुद्धौ तु दीर्घाप्राप्त्या उत्वे हे दीर्घाहो निदाघ ! इति सिद्धम् ॥७८॥

[ असृक् ) सृजेः क्विनो विधानेन क्विन्प्रत्ययस्येत्यत्र बहुव्रीहिबलादत्रापि कुत्वम्। न चैवं विश्वसृडादावपि कुत्वं स्यादिति वाच्यम्, सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगेणाव्ययपूर्वपदे केवले

च कुत्वकल्पनेनादोषात्। न चैवमुपयट्काम्यति उपसृट्काम्यतीति भाष्यप्रयोगासङ्गतिरिति वाच्यम्, अश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वम्, असृक्शब्दे तु अस्यतेरौणादिके ऋजिप्रत्यये चोः कुरिति कुत्वेन सिद्धिरिति कल्पनेनादोषात् ॥७९॥

शोभना आपो येषु इत्यर्थे समासाज्जश्शसोः श्यादेशे नित्यात्परादपि नुमः प्राक् प्रतिपदोक्तत्वादप्तृन्निति दीर्घे ततो नुमि स्वाम्पि। निरवकाशत्वं प्रतिपदोक्तत्वन्न तु तत्तच्छब्दानुवादेन विहितत्वमेवेति सते दीर्घस्याप इत्यत्र चारितार्थ्येन निरवकाशत्वाभावान्नुमेव स्वम्पीति ॥८०॥

ननु प्रत्ययः परश्चेत्यधिकारात्परशब्दयोगे अन्यारादिति पञ्चमीविधाने प्रातिपदिकविशेषणाद्येन विधिरिति तदन्तविधौ अजाद्यन्तादन्ताच्च प्रातिपदिकाट्टाबित्यर्थः कुतो नेति चेन्न, पञ्चानामजानां समाहार इत्यर्थे तद्धितार्थेति समासे संख्यापूर्वो द्विगुरिति द्विगुसंज्ञायामकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीत्वे द्विगोरिति ङीपि पंचाजीत्यत्र टाबापत्तेरतो लक्ष्यानुरोधात्षष्ठ्यन्ततया व्याख्यानान्न दोष इत्याशयेनाह—अजादिभिः स्त्रीत्वस्येत्यादि ॥८१॥

ननु समासप्रत्ययविधौ प्रतिषेध इति निषेधात्तदन्तविध्यभावे शूद्ररूपात्प्रातिपदिकादित्यर्थे महाँश्चासौ शूद्रो महाशूद्रो महाशूद्रत्वजातिविशिष्टा स्त्री महाशूद्रीत्यत्र दोषाभावेन शूद्राचामहत्पूर्वाजातिरित्यत्रामहत्पूर्वग्रहणं व्यर्थमेवेति चेन्न, स्त्रीप्रत्यये समासप्रत्ययविधाविन्त्यस्याप्रवृत्तिज्ञापनेन चारितार्थ्यात् ॥८२

[पञ्च स्त्रियः] नन्वत्र कार्यकालपक्षे नान्तत्वाभावेन षट्संज्ञाया अप्राप्त्या कथं न षडिति निषेध इति चेन्न, षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वेन भूतपूर्वषट्त्वाश्रयणेन वा निषेधसंभवात् ॥८३॥

ननु प्रत्ययस्थादिति सूत्रे पूर्वस्येत्यस्याभावेऽपि उभयनिर्देशे पंचमीनिर्देशो बलीयानिति बलात्, प्रत्ययस्थककारात्परस्येत्वमित्यर्थेऽपि सर्विके-

त्वस्य न दोषः। अत्रैव तपरकरणेन, अत्‌ग्रहणेन न यासयोरिति निषेध-सामर्थ्येन च पूर्वस्यापीत्वमिति; पूर्वस्य परस्य च प्राप्तौ पूर्वस्यैवेति च ज्ञापनादिति पूर्वग्रहणं व्यर्थमेवेति चेन्न; कटुकेत्यत्र दोषापत्तेरिति दिक्॥

भस्त्रैषेति सूत्रे आतः स्थाने इत्यनुवृत्तस्य स्वशब्दस्यैव विशेषणत्वमिति संज्ञोपसर्जनाभ्यामन्यत्रात्मीयायामकचि आतःस्थानिकत्वाभावात्स्विका परमस्विकेत्यत्र प्रत्ययस्थादिति नित्यमेवेत्वम्; संज्ञोपसर्जनयोस्तु टापि अज्ञाते के, केण इति ह्रस्वे पुनष्टापि स्विका स्वका निःस्विका निःस्वकेत्यत्रानेन विकल्पेनेत्वमिति दिक्॥ ८५॥

अभाषितपुंस्काच्चेत्यत्र परपञ्चमीस्वीकारे न विद्यते खट्वा यस्या इत्यर्थे बहुव्रीहौ शेषाद्विभाषेत्यस्य वैकल्पिकत्वेन कपोऽभावे गोस्त्रियोरिति ह्रस्वे पुनष्टापि अज्ञाताऽखट्वेत्यर्थे के, केण इति ह्रस्वे पुनष्टापि अनेन विकल्पेनेत्वापत्तेः। अत एवोक्तं मूले बहुव्रीहेर्भाषितपुंस्कत्वादित्यादि। अत्रैव समासात् शेषाद्विभाषेति कपि गोस्त्रियोरिति ह्रस्वाभावे केण इति ह्रस्वे प्राप्ते न कपीति निषेधे आपोऽन्यतरस्यामिति वैकल्पिकह्रस्वेऽनेनेत्वविकल्पे, अखट्विका अखट्वका अखट्वाकेति दिक्॥८६॥

ननु समासप्रत्ययविधाविति तदन्तविधिनिषेधे टिड्रूपं यत्प्रातिपदिकमित्यर्थेऽवयवेऽचरितार्था अनुबन्धाः समुदायस्योपकारका भवन्तीति बलात्कुरुचरीति सिद्धौ, अनुपसर्जनाधिकारः किमर्थः, बहुकुरुचरेत्यत्र तु न दोषः, यं समुदायं यो न व्यभिचरति स तस्योपकारको भवतीति स्वीकारादिति चेन्न, स्त्रीप्रत्यये समासप्रत्ययविधावित्यस्याप्रवृत्तिज्ञापनेन चारितार्थ्यादिति संक्षेपः॥८७॥

वचेर्लिटः शानचि स्ये कुत्वषत्वे आनेमुगिति मुकि णत्वटापोर्वक्ष्यमाणेति, अत्र न ल्यपीति ज्ञापकेन इत्वघटितधर्मानयनेऽनल्विधावित्यस्याप्रवृत्तिज्ञापनेन लृटष्टित्त्वेऽगित्त्वे स्थानिवत्त्वेनादाय ङीप्तु नाशंक्यः, यासुटो ङित्त्वेन लाश्रयमनुबन्धकार्यन्नादेशानामिति ज्ञापनात्। नच ङिच्च पिन्नेति भाष्यान्ङित्करणस्य चारितार्थ्येन ज्ञापकत्वासम्भवादुक्तदोषो दुर्वार इति

वाच्यम्, अःशानचः शित्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधावित्यस्य प्रवृत्तिकल्पनेनादोषात्। अत्र शित्वस्यापि भाष्ये प्रत्याख्याने तु सत्यभिधानेऽजादित्वाट्टाविति दिक् ॥८८॥

अन् इत्यनेनाणि प्रकृतिभावबाधनार्थं कृतेन कार्मस्ताच्छील्ये इति निपातेन, अणि सति यत्कार्यं तत्ताच्छीलिकेणेऽपि भवतीति ज्ञापनेन, चुराशीलमस्या इत्यर्थे छत्रादिभ्यो ण इति णे आद्यचो वृद्धौ टिड्ढा-णेति ङीपि चौरीति सिद्धम् ॥८९॥

क्नरपोऽयञश्चेति संहितापाठेन अपत्यग्रहणं कर्त्तव्यमिति वार्त्तिक-प्रत्याख्यानस्य फलैक्याय वार्त्तिकेऽपत्यपदमपत्याधिकारस्थपरमित्यनु-मीयते तेन द्वीपे भवा द्वैप्येत्यत्रेव दैवस्यापत्यं दैव्येत्यत्रापि यञश्चेति ङीप् न। देवाद्यञञाविति हि यञ् प्राग्दीव्यतीयो न त्वपत्याधिकार-पठित इति दिक् ॥९०॥

गर्गादियञन्ताद्गार्ग्यशब्दात् प्राचां ष्फस्तद्धित इति ष्फे षः प्रत्ययस्ये-तीत्संज्ञायां लोपे च आयनेयीति आयनादेशे षित्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे उक्तार्थानामप्रयोग इति न्यायं बाधित्वा षिद्गौरेति ङीषि णत्वे गार्ग्यायणीति, पक्षे यञश्चेति ङीपि अकारलोपे हलस्तद्धितस्येति यलोपे गार्गीति ॥ ९१ ॥

प्राचां ष्फ इति सूत्रे तद्धितग्रहणेन क्वचिदन्यतोऽपि भवतीति ज्ञापनेन आसुरेरुपसंख्यानमिति सिद्धम्; तेन ष्फे आयनादेशे षित्वसा-मर्थ्यात्षिद्गौरेति ङीषि आसुरायणीति सिद्धम् ॥ ९२ ॥

ममेयमित्यर्थे तस्येदमित्यणि तवकममकावेकवचने इति ममकादेशे आद्यचो वृद्धौ अण्णन्तत्वाट्टिड्ढेति ङीपि सिद्धे, केवलमामकेति सूत्रे मामकग्रहणं व्यर्थं सत्, अण्णन्तान्मामकशब्दाद्यदि ङीप् स्यात्तर्हि संज्ञा-छन्दसोरेवेति नियमयति तेन लोकेऽसंज्ञायां मामकेति मूले स्पष्टम् ॥९३॥

उदात्तग्रहणं वृषाकप्यर्थम् अन्यथा लघावन्ते द्वयोश्च बह्वचो गुरु-रिति मध्योदात्तापत्तेरिति भाष्येण कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घ-मध्य इत्यनुमीयते ॥ ९४ ॥

ननु अनुपसर्जनादित्यस्य अन्यत्रेव वर्णादनुदात्तादित्यत्रापि गृह्यमाण: विशेषणत्वं कुतो नेति चेन्न त्रीण्येतान्यस्या इत्यर्थे त्र्येणीति गृह्यसूत्र-प्रयोगेणाऽत्र तदन्तविशेषणत्वादिति दिक् ॥९५॥

दंशत्यनयेत्यर्थे दाम्नीशसेति ष्ट्रनि षत्वादिषु कृतेषु टापि दंष्ट्रेत्यत्र षिद्गौरेति ङीप् तु नाशंक्य:, गौरादिषु मातामहीशब्दपाठेनानित्य: षितां ङीपिति बोध्यते, अन्यथा मातरि षिच्चेति षित्वादेव सिद्धे: ॥९६॥

ननु जानपदेति सूत्रे अमत्रग्रहणेन कुण्डशब्दादमत्रे एव ङीपनान्य-त्रेति नियमेन, अमृते जारज: कुण्ड इति कुण्डशब्दाज्जातिलक्षणोङीप् कथमिति चेन्न; अमत्रेऽनुगतसंस्थानव्यंग्यरूपजातित्वाभावेनाप्राप्तौ नियमत्वासम्भवात्। स्त्रीविषयत्वादिति मूलस्य जातित्वाभावादित्यर्थ इति दिक् ॥९७॥

ननु नागशब्दस्य जातिवाचकत्वेन जातेरिति ङीपिसिद्धेजानपदेति सूत्रे नागग्रहणं व्यर्थमिति चेन्न, इयं स्त्री नागी हस्तिनी स्थौल्यगुणयोगा-दित्यत्र नागशब्दस्यैकव्यक्तिवृत्तित्वेन जातिवाचकत्वाभावेनासिद्धे:। न चात्र स्थूलग्रहणं व्यर्थमिति वाच्यम्; इयं स्त्री नागा सर्पिणी दैर्घ्य-गुणयोगादित्यत्र दोषापत्ते: ॥९८॥

कर्तृकरणे कृता बहुलमिति सूत्रे बहुलग्रहणेन, अम्बाम्बेति सूत्रे गवादिग्रहणेन, क्रीतात्करणपूर्वादिति सूत्रे पूर्वग्रहणेन च गतिकारकोप-पदानां कृद्भि: सह समासवचनं प्राक् सुबुत्पत्तेरित्यस्यानित्यतया सुबन्तेन समासात्पूर्वमेव, धनेनाक्रायीत्यर्थे टापि तत: सुपि समासेऽदन्त-त्वाभावात्क्रीतात्करणपूर्वादित्यस्याप्राप्तिरिति दिक् ॥९९॥

आनुकि दीर्घोच्चारणेन क्वचिदन्यत्रापि भवतीति ज्ञापनाद्ब्रह्माणीति सिद्धमिति केचित्। परे तु अनुकरणे पररूपापत्ति:, अकारोच्चारणसाम-र्थ्यात्पररूपं नेति तु न युक्तम्, अल्लोपोऽन इति लोपापत्ते: तथा च ब्रह्माणमानयति जीवयतीत्यर्थेऽण्णन्तान्ङीबित्याहुरिति दिक् ॥१००॥

ननु कल्याणपाणिपादेत्यत्र ङीष्वारणाय स्वाङ्गादिति सूत्रेऽस्वाङ्ग-

पूर्वपदादित्यस्य सम्बन्धो भाष्ये कृतः, ततश्च स्वाङ्गभिन्नपूर्वपदकस्यैव स्वाङ्गवाचकस्य ग्रहणात्, शिखेत्यत्र दोषाभावेनोपसर्जनादृग्रहणं व्यर्थमेवेति चेन्न. शोभना शिखा सुशिखेत्यत्रादोपाय तस्यावश्यकत्वादिति दिक् ॥

## ( इति स्त्रीप्रत्ययान्तो भागः )

ननु प्रातिपदिकार्थमात्रे प्रथमासिद्धौ किमर्थं परिमाणग्रहणमिति चेन्न नामार्थद्वयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति व्युत्पत्तिबलेन द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति मूलोक्तार्थानुपपत्तेः। सति त्वस्मिन् प्रत्ययार्थे परिमाणे प्रकृत्यर्थो ( द्रोणरूपः ) अभेदेन संसर्गेण विशेषणम्; प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन सम्बन्धेन व्रीहौ विशेषणमिति दिक् ॥१॥

ननु प्रातिपदिकार्थे प्रथमासिद्धौ वचनग्रहणं व्यर्थमिति चेन्न, उक्तार्थानामप्रयोग इति निषेधादेक इत्यादौ प्रथमानापत्तेः। अन्या विभक्तिस्तु न सम्भवति अनन्वितार्थकविभक्तिकल्पनापेक्षया अनुवादकविभक्तेरेव न्याय्यत्वादिति दिक् ॥२॥

क्रियान्वयित्वं कारकत्वमिति स्वीकारे ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र ब्राह्मणस्यापि कारकत्वं स्यात्; साक्षात् क्रियान्वयित्वं तत्त्वमिति स्वीकारे मातुः स्मरतीत्यत्र मातुः कारकत्वं स्यात्. अतः क्रियाजनकत्वेनाऽन्वयित्वं तत्त्वमिति बोध्यम् ॥३॥

[ कर्तुरीप्सिततमं कर्मेति ] कर्तृवृत्तिव्यापारवाचकधातुवाच्यमथ च व्यापारप्रयोज्यं यत्फलं तादृशफलवत्त्वप्रकारकेच्छानिरूपितविषयताश्रयः कारकं सत्कर्मसंज्ञं भवतीत्यर्थः ॥४॥

[ कर्तुः किमिति ] अयं भावः कारकाधिकारात्कारकवृत्तिव्यापारप्रयोज्येत्याद्यर्थेनैव सिद्धे कर्तुर्ग्रहणं व्यर्थमिति चेन्न, माषेषु प्रसक्तमश्वंमापनाशो माभूदित्यन्यत्र बध्नातीत्यर्थके माषेष्वश्वं बध्नातीत्यत्र अश्ववृत्तिव्यापारप्रयोज्यगलाधःसंयोगाश्रयत्वेन माषाणां कर्मत्वापत्तेः, कृते

तस्मिन् कर्तृग्रहणसामर्थ्यात् प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयस्यैव कर्तुर्ग्रहणेनादोषात्। अत एवोक्तं मूले कर्मण ईप्सिता माषा न तु कर्तुरिति दिक् ॥ ५ ॥

[ तमप्ग्रहणं किमिति ] अयं भावः कर्तुरुद्देश्यं कर्मेत्येव सिद्धे ईप्सिततमग्रहणं व्यर्थमिति चेन्न यदा कृतभोजनोऽपि पयोलाभेन पुनरोदन-भोजने प्रवर्तते तदा पयसा ओदनं भुंक्ते इत्यत्र पयसः कर्मत्वापत्तेः। नन्वेवमपि ईप्सितमित्येव सिद्धे तमप्ग्रहणं व्यर्थमिति चेन्न अग्नेर्माणवकं वारयतीत्यत्र वारिधातुवाच्यसंयोगरूपफलाश्रयत्वेन अग्नेरपि कर्मत्वापत्तौ वारणार्थानामीप्सित इत्यस्यानवकाशतया माणवकादपि पञ्चम्यापत्तेः, कृते तु तस्मिन् ईप्सिततमे अस्य प्राप्तिरिति दिक् ॥६॥

[ अर्थनिबन्धनेयं संज्ञेति ] अहमपीदमचोद्यं चोद्ये इति कैयट-प्रयोगेण मारीचमुच्चैर्वचनं महार्थमिति भट्टिप्रयोगेण च अर्थनिबन्धनेयं संज्ञेति ज्ञायते, तेन बलिं भिक्षते वसुधामित्यादिसिद्धिरिति प्राचीनाः। नव्यास्तु परिगणितातिरिक्तानां येषां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वेन कर्त्तुरित्येव कर्मत्वम्, अतएव दुहि-याचि-रुचि-प्रच्छि-भिक्षि-चिञामिति भाष्योक्तपरिगणने भिक्षिग्रहणं सार्थकमिति दिक् ॥७॥

ननु शत्रूनगमयत् स्वर्गमित्यादौ कर्त्तुरित्येव सिद्धे गतिबुद्धीति सूत्रं व्यर्थमिति चेन्न णिजर्थव्यापारप्रयोज्य-फलाश्रयाणां यदि कर्मत्वं स्यात् तर्हि गत्याद्यर्थकानामेवेति नियमार्थत्वात्, तेन देवदत्तः पचति तं यज्ञदत्तः प्रेरयतीत्यर्थे पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यत्र देवदत्तस्य कर्मत्वं नेति संक्षेपः ॥ ८ ॥

ननु दर्शयति हरिं भक्तानित्यत्र बुद्ध्यर्थत्वादेव सिद्धे दृशेश्चेति वार्तिकं व्यर्थमिति चेन्न, गतिबुद्धीतिसूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामिति ज्ञापनार्थत्वात्। तेन स्मारयति घ्रापयति देवदत्तेनेत्यत्र कर्मत्वं नेति दिक् ॥ ९ ॥

[येषां देशेति] अयं भावः "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।

प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति" बलात् अविवक्षितकर्मत्वे अकर्मकत्वात् पाचयति देवदत्तेनेत्यत्र कर्मत्वं कुतो नेति चेन्न, अकर्मकग्रहणसामर्थ्यात् "येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः, नत्वविवक्षितकर्माणोऽपि" इत्यर्थबोधनेनादोषात् तेन मासमासयति देवदत्तमित्यत्र भवति; प्रकृते नेति दिक् ॥१०॥

[पापेऽभिनिवेश इति] एष्वर्थेष्वभिनिविष्टानामिति भाष्यप्रयोगेण अभिनिविशश्चेति सूत्रे परिक्रयणे सम्प्रदानमन्यतरस्यामिति सूत्रान्मण्डूकप्लुतिन्यायेनान्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाङ्गाश्रित्य क्वचिदप्रवृत्त्या प्रकृते नेति प्राचीनाः। नव्यास्तु उक्तभाष्यप्रयोगेण प्रकृतसूत्रे अविकृतस्यैव विशेर्ग्रहणेन उक्तप्रयोगेऽप्राप्त्या उक्तक्लेशो निरर्थक इत्याहुः ॥११॥

[सर्पिषोऽपि स्यात्] अप्रयुज्यमानपदस्यार्थः पदार्थः इत्यपि शब्दस्य विन्दुद्योतकत्वेन पदार्थद्योतकत्वादपिः पदार्थसम्भावनेत्यादिना कर्मप्रवचनीयत्वेन स्यादित्यत्र षत्वाभावः। अत्र आशङ्कायां लिङ्, आशङ्का उत्प्रेक्षा सम्भावना, तथा च सर्पिरवयवविन्दुकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवती सम्भावनाविषयासत्तेति वाक्यार्थः। अत्र स्वकर्तृकदौर्लभ्यप्रयुक्तदौर्लभ्यवत्त्वसम्बन्धोऽप्यपिद्योत्यः। सर्पिष इत्यत्र विन्दोरवयवावयविभावसम्बन्धे षष्ठी, द्वितीया तु न कर्मप्रवचनीयद्योत्यसम्बन्ध-प्रतियोगिवाचकादेव तद्विधानेन तदप्राप्तेः। अन्यत् सर्वं मूले सुगममिति दिक् ॥१२॥

[गङ्गायां घोष इति] अयं भावः करणमिति महासंज्ञया साधके लब्धे साधककरणमेव साधकतमार्थं भविष्यतीति तमप्ग्रहणं व्यर्थमिति चेन्न, अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयत इति ज्ञापनार्थत्वात् तेन गङ्गायां घोष इति गौणाधारेऽपि सप्तमी सिद्धा। अन्यथा अधिकरणमिति महासंज्ञया आधारे लब्धे आधारग्रहणात् सर्वावयवव्याप्त्या य आधारस्तस्यैव ग्रहणापत्तौ तिलेषु तैलं दध्नि सर्पिरित्यादावेव स्यान्न तु प्रकृते, इति दिक् ॥१३॥